अं अन्तरात्मने० पं परमात्मने० बं वामा शक्त्यै जें ज्येष्ठा शक्त्यै कां कान्ति शक्त्यै० कां कला शक्त्यै० कं कलविकरिण्यै वं बलविकरिण्यै० बं बल प्रमथिन्यै० सं सर्व दमिन्यै० मं मनो मथिन्यै शक्त्यै इति पीठं सम्पूज्य तन्मध्ये ओम् नमो भगवते सकलगुणात्मक शक्तियुक्ता–यानन्ताय योग पीठात्मने नमः। इत्यासनं सम्पूज्य तत्र मूलेन मूर्तिं सम्पूज्य आवाहयेत्। प्राणायाम ऋष्यादि कर षडङ्ग न्यास ध्यानादिंक कृत्वा पुष्पाञ्जलिमानीय हृदय कमल मध्यस्थं साङ्गं सपरिवारं सायुधं सवाहनं सशूलिनं दुर्गासहितं श्री शरभेश्वरं आवाहयामीति यन्त्र मध्ये पुष्पांञ्जलि निक्षिप्य आवाहनादि मुद्रां प्रदर्श्य मूलमुच्चरन् चतुर्थ्यन्तेन आवाहयामि आवाहितो भव सन्निहितो भव सन्निरुद्धो भव अवगुण्ठितो भव सकली कृतो भव इत्यावाहयेदिति पीठ पूजा। अथ प्राणप्रतिष्ठां कुर्यात् यन्त्रे तद्यथा+लेलिहान मुद्रया हृदि हस्तं दत्वा त्रिःसम्पूज्य सन्तर्प्यं मूलमन्त्रेण उपचारान् कृत्वा तत्र पाद्यार्घ्याचमनीय मधुपर्कार्घ्यं सामान्यार्घ्यं निवेदयेत्।

पात्रं स्थापयित्वा मूलान्ते पूर्ववत् इदं पाद्यं पादयोः, पुनर्मूलान्ते इदमर्घ्यं हस्तयोः इदमाचमनीयं मुखे, इदं स्नानं सर्वाङ्गे, इदं वस्त्रं इदमुपनीतम्, इदं भूषणं, इदं गन्धं, इमे अक्षताः, इमानि पुष्पाणि, इदं धूपं, इदं दीपं इदं, नैवेद्यं, इदं ताम्बूलम् इमां दक्षिणां, इदं फलं समर्पयामि नमः। इति

षोडशोपचारैः सम्पूज्य पुष्पाञ्जलित्रयं दत्वा आवरण पूजां कुर्यात् सा यथा मध्ये मूलेन त्रिः सम्पूज्य पुनर्मूलमुच्चार्य एताः हृदयादि षडङ्गदेवताः साङ्गाः सपरिवाराः सवाहनाः सायुधाः सन्तर्पिताः सन्तु नमः इति पुष्पाञ्जलिं दत्वा अभीष्ट सिद्धिं मे देहि शरणागत वत्सलाः भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्। इति सामान्यार्घ्योदकेन दक्ष हस्ते जलं समर्प्य मां शान्तिदाः सुखदाः सन्तु इति पुष्पाञ्जलिं समर्प्य प्रणमेत्। इति प्रथमावरणम् ततः त्रिकोण वाम दक्षोर्ध्व कोणेषु ॐ श्रां चन्द्रं पूजयामि नमः त्रिकोणान्ते चतुर्दिक्षु भं भैरवं पू० पुरतः पश्चिम भागे भ्रूं वडवाग्नि पू० दक्षिण भागे ॐ क्षं कालीं पू० वाम भागे उं हुं शालिनी दुर्गां पूजयामि हैं मृत्युं पू० शेषं पूर्ववत् इति द्वितीया–वरणम्। अष्ट दलेषु ॐ लं इन्द्रं सवज्रं पूजयामि। ॐ रं अग्नि स शक्ति पूजयामि। ॐ यं यमं सदण्डं पू०। ॐ क्षं निर्ऋतिंसखड्गं पू०। ॐ वं वरुणं सपाशं पू०। ॐ यं वायुं सांकुशं पू०। ॐ सं सोमं सगदं पू०। ॐ हीं ईशानं सत्रिशूलं पू०। इति सम्पूज्य मूलेन त्रिः सम्पूज्य पुनर्मूलमुच्चार्य शेषं पूर्ववत् अभीष्ट सिद्धिमित्यादि तृतीयावरणम्। ऐ ह्रीं श्रीं द्वादश रेफाग्रादि प्रादक्षिण्येन मदनाद्याः पूजयेत्। ॐ मदनां सावरणं पू० ॐ ह्रीं रक्त चामुण्यां सायुधां पू० ॐ हुं मोहिनीं सायुधां पू०। ॐ द्रां द्राविणीं साङ्गां सपरिवारां सायुधां सवाहनां स शिवां पू०।

ॐ हैं शब्दाकर्षिणीं पू०। ॐ संवाणीं पू०। ॐ श्रीं रमां पू०। ॐ क्षूं मायां पू०। ॐ शत्रु पुलन्दिनीं पू०। ॐ क्ष्म्रां शास्तां पू०। ॐ क्ष्म्रूं क्षोभिणीं पू०। ॐ में ज्येष्ठां पू०। इति सम्पूज्य मूलेन त्रिः सम्पूज्य पुनर्मूलमुच्चार्य एताः मदनाद्या इति पूर्ववत् अभीष्ट सिद्धिमित्यादि इति चतुर्थावरणम्।। षोडशार दले स्वाग्रादि प्रादक्षिण्येन यजेत्। ॐ आं ओं ब्रह्माणं साङ्गं सपरिवारं सायुधं सवाहनं सशक्तिकं पूजयामि नमः इति सर्वत्र पूजयेत्। ॐ आं सौं परां पूजयामि। ॐ ह्रूं श्रौं विष्णुं पूजयामि। ॐ ईं ह्रीं मायां पूजयामि। ॐ हुं ध्रां वराहं पू०। ॐ उं द्रैं पृथ्वी पू०। ॐ रुं ज्यां विधिं पू०। ॐ रुं षं शिवं पू.। ॐ लं नासत्यौ पू०। ॐ लूं वैं ट्रं स्त्रं पू०। ॐ ऐं ऐं वीरभद्रं पू०। ॐ ऐं ओं भारतीं पू०। ॐ औं कं शुकं पूजयामि। ॐ औं ह्यौं शकरं पू०। ॐ अं ड़ं रुद्रं पू०। ॐ अः हीं कालरुद्रं पू० इति सम्पूज्य पुनर्मूलमुच्चार्य अभीष्ट सिद्धिमित्यादि एताः पूजिताः वरदाः भवन्तु इत्यादिना पुष्पाञ्जलिं निक्षिप्य प्रणमेदिति पञ्चमावरणम्। प्रथम भूपुरे पुर्वादि ॐ गं गणपतिं साङ्गं पू०। ॐ यं यमं पू०। ॐ स्कं स्कन्दं पू०। ॐ भं भैरवं पू०। विदिक्षु वायव्यादि ॐ मैं त्वरितां पू०। ॐ बं बडवानल भैरवं पू०। ॐ इं महामायां पू०। बाह्य भूपुरे स्वाग्रादि प्रादक्षिण्येन ब्राह्माद्याः पूजयेत्। ॐ आं ब्राह्मीं पू०। ॐ ईं माहेश्वरी पू०। ॐ उं कौमारीं पू०। ॐ ॠं वैष्णवीं

पू०। ॐ लूं वाराहीं पू०। ॐ ऐं माहेन्द्रीं पू०। ॐ औं चामुण्डां पू०। ॐ अः महालक्ष्मीं पू०। इति सम्पूज्य मूलमुच्चार्य अभीष्टेति षष्ठावरणम्। ततः परितः वृत्त क्रमेण ब्रह्माद्याः पूजयेत्। ॐ कं ब्रह्माणं पूजयामि। ॐ खं जान्हवीं पू०। ॐ गं गणेशं पू०। ॐ घं भैरवं पू। ॐ ङं कालीं पू०। ॐ चं भद्रकालीं पू०। ॐ छं जातवेदसं पू० ॐ जं अर्द्ध नारीश्वरं पू०। ॐ झं परमात्मानं पू०। ॐ ञं पृथ्वीं पू०। ॐ टं चं डं पू०। ॐ ठं शुक्रं पू०। ॐ डं विष्णुं पू० ॐ ढं बलभद्रं पू०। ॐ णं धनदं पू० ॐ तं परा शक्तिं पू०। ॐ थं दुर्गां पूजयामि। ॐ दं निर्विकल्पं पू०। ॐ धं नं नासत्यं पू०। ॐ पं फं दस्त्रं पू०। ॐ मं ईश्वरं पू०। ॐ मं मदनं पू० ॐ यं वायुं पू०। ॐ रं कृशानुं पू० ॐ रं शुक्रं पू०। ॐ वं वरुण पू०। ॐ शं शङ्करं पू०। ॐ षं द्वादशादित्यां पू०। ॐ सं भारती पू०। ॐ हं सदाशिवं पू०। ॐ लं इन्द्रं पू०। ॐ क्षं सिंह पू०। इति सम्पूज्य मूलेन निः सम्पूज्य पुनर्मूलमुच्चार्य एता ब्रह्माद्या अभीष्टेति च सप्तमावरणम्। इत्थमावरण पूजनं कृत्वा पाद्यार्घ्याचमनीयं दद्यात्। स्व गृह्योक्त विधिना विधाय तत्रेशानाग्नेय निर्ऋति वायव्यादि कोणेषु सामान्यार्घ्येण मण्डल चतुष्टयं कृत्वा ॐ व्यापक मण्डलायनमः इति मण्डल चतुष्टयं सम्पूज्य ॐ ऐं ह्रीं श्रीं ॐ एह्येहि देवी पुत्र बटुकनाथ कपिलजटा भार भास्वर त्रिनेत्र ज्वालामुख सर्व विघ्नान्नाशय नाशय

सर्वोपचार वलिं गृह्ण स्वाहा। इति वामांगुष्ठानामिकाम्यां धृत्वा द्वितीय खड्ग धारया बलिं हरेत्। बलि दानेन सन्तुष्टो बटुकः सर्व सिद्धिदः। शान्ति करोतु मे नित्यं भूत वेताल सेवितः।। इति पुष्पाञ्जलिं दद्यात् इति बटुक बलिः। आग्नेय मण्डले यां योगिनीभ्यो नमः। भो सर्व योगिन्याः इहागच्छन्तु इत्यावाह्य गन्धादिभिः सम्पूज्य योगिनी बलिद्रव्याय नमः इति बलिद्रव्यं पूजयेत्। ऊर्ध्वं ब्रह्माण्डतोवा दिविगगनतले भूतले वा तले वा पाताले वा स्थले वा सलिल पवन् योर्यत्र कुत्रस्थिता वा। क्षेत्रे पीठोपपीठादिषु च कृतपदा धूप दीपादिकेन प्रीता देव्यः सदा नः शुभ बलि विधिना पान्तु वीरेन्द्र वन्द्याः।। यां योगिनीभ्यो नमः स्वाहा सर्व योगिनीभ्यः फट् इति वामांगुष्ठानामिकाभिः बलिं हरेत्। या काचिद् योगिनी रौद्राः सौम्या घोर परात्पराः खेचरी भूचरी व्योमचरी प्रीतास्तुसर्वदा इति पुष्पाञ्जलिंदत्वा प्रणमेत्। इति योगिनी बलिः। अथ नैऋत्यमण्डले क्षात्र पालाय नमः क्षेत्रपालमावाह्य। गन्धादिभिः सम्पूज्य क्षां क्षीं क्षूं क्षै क्षौ क्षः स्थान क्षेत्रपाल इहागत्य धूप दीपादि सहितं बलिं गृह्ण गृह्ण गृह्ण स्वाहा इति वामांगुष्ठ तर्जनीभ्यां बलिं हरेत् योऽस्मिन् क्षेत्र निवासी क्षेत्रपालः सकिंकरः प्रीतोऽयं बलिदानेन सर्व रक्षां करोतु मे। इति क्षेत्रपाल बलिः अथ वायव्य मण्डले गं गणपतये नमः गणपतिमावाह्य गन्धादिभिः सम्पूज्य गणपति बलिद्रव्याय

नमः इति बलि द्रव्यं पूजयेत्। गां गीं गूं गैं गौं गः गणपते वर वरद सर्वान् वशमानय बलिं गृह्ण गृह्ण स्वाहा। वामांगुष्ठ मध्यमाभ्यां बलिं हरेत्। सर्वदा सर्वकार्याणि निर्विघ्नं साधयेत् सदा। शातिं करोतु सततं विघ्नराजः सशक्तिकः। इति पुष्पाञ्जलिं दद्यात् इति गणपति बलिः। ततः स्व वाम भागे सर्वभूत बलिं दद्यात्। सुरगणाद्वा सर्वभूत गणा इहागच्छन्तु इत्यावाह्य गन्धादिभिः सम्पूज्य सर्वभूत बलि द्रव्याय नमः इति बलि द्रव्यं पूजयेत्। ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्व भूतेभ्यो हुँ इति वामांगुष्ठादि सर्वांगुलीभ्यः बलि हरेत्। भूता ये विविधाकारा दिवि भूम्यन्तरिक्षगाः। पातालस्थल संस्था च शिव योगेन भाविताः।। क्रू राद्या शत संख्यैका पाखण्डाद्याः व्यवस्थिताः। तृप्यन्तु प्रीतिमनसाः पूजां गृहणन्त्विमं बलिम्।। इति पुष्पाञ्जलिं दद्यात् इति भूत बलिः ॐ सर्वेभ्यो नमः इति सर्वमभ्यर्च्य नाराच मुद्रां बध्वा। बलिदानेन सन्तुष्टाः। क्षमध्वं बलिदेवताः। यथा सुखं चिरं रन्तुं यथेष्ट मुदिता वराः।। बटुकाद्या सुराः सर्वे सर्वे सिद्धि विधायिनः। शान्ति पुष्टिं प्रयच्छन्तु ते प्रसादात्तु सदाशिवः।। स्तुत्वा मुद्रां विसर्ज्य प्रोक्षणी जलेन आत्मानं प्रोक्षयेदिति बलिदान विधिः।।

ततः उत्तरापोषणं दत्वा नैवेद्यं विसृज्य करप्रक्षालनाचमनानि दत्वा नीराजनं कुर्यात् ततः स्वर्णादि पात्रे अष्टदलं विरच्य गोधूम पिष्ट रचितानि

नव दीपानि पात्रे संस्थाप्य मूलेन प्रज्वाल्य अष्ट दिक्षु ब्राह्माद्याः मध्ये मलेन सम्पूज्य अमृती कृत्य अवगुण्ठ्य चक्रेण संरक्ष्य मूलेनाष्टधाभिमन्त्र्य जानुभ्यामवनिं गत्वा नीराजयेत्।

समस्त देव देवेश परिवारगणावृत आरार्तिकमिदं देव गृहाण ममसिद्धये इति आरार्तिक मन्त्रेण परिवर्त्य भूमाकारेण परिभ्रामयेत् इत्यारार्तिक विधिः। ततः कवच स्तोत्र सहस्त्रनामादि पारायणं कुर्यात् अथ काम्य प्रकरणानि लिख्यन्ते ठकारं पूर्वमालिख्य तद्वाह्ये वर्तुलं लिखेत्।

तद्वाह्ये चतुरस्त्रं तु तद्वाह्येष्टदलं तथा।
तद्वाह्ये षोडशदलं तद्वाह्ये वृत्तमालिखेत्।।
तद्वाह्ये पञ्चकोणञ्च ठकारे साध्यनाम च। वर्तुले
मूलमालिख्य स्वरान् षोडश पार्वति।।
वृत्तेचाभिमंतं आर्द्धं वाणस्य पञ्च कोणके।
द्रां द्रीं क्लीं ब्लूं सः एक्मालिख्य यन्त्रं तु तालपत्रे प्रयत्नतः।।
स्नुही क्षीरं जले क्षिप्त्वा यन्त्रं तत्रैव निक्षिपेत्।
चुल्लोपरि चिरं स्थाप्य पाकेन सर्व शत्रवः।।
गृहं त्यक्त्वा पलायन्ते प्रसादात् शालुवेश्वरः।
साधके सर्व सिद्धिः स्यात् रिपुः देशान्तरं ब्रजेत्।।
शालुवं पक्षिराजानं योध्यायेल्लोक पूजितम्।
शत्रूणां सर्व संघाता नोत्पद्यन्ते कदाचन।।

चन्दनं च सकर्पूरं कस्तूरी कुंकुमान्वितः।
वामाबर्ते लिखेन्मन्त्रं शरभं चिन्तयन्नरः।।
ललाटे तिलकं कृत्वा त्रैलोक्यं मोहयेत्क्षणात्।
देवांश्चापि वशीकुर्यात् किं पुनर्मानवादयः।।
गोरोचनञ्च गोक्षीरं गोमयं गोघृतं तथा।
शन्यर्काङ्गारवारे तु मूलेनैव होमयेत्।।
देवासुर मनुष्याणां स्त्रीपुंसां वशकृद्भवेत्।
अजा माहिषकं चैव नवनीतं तथा नरः।।
हुतेन मूले पञ्चाहे साध्यनाम पुरः सरम्।
साध्य वश्यो भवेत्सत्यं क्षिप्रमेव न संशयः।।
अजा मानुष काकानां रुधिरं प्रेतवाससम्।
संवेष्ट्य पुत्तलीं कृत्वा साध्य नाम्नाक्गिर्भिताम्।।
निखनेत्तत्र प्रेतस्य हृदये च शिरसिक्रमात्।
केशान् गृहीत्वा संवेष्ट्य पुत्तली प्राणपूर्वकम्।।
शवदाहस्खलेनैव निक्षिपेदाशुचालयेत्।
शालुवं पक्षिराजानं यो ध्यायेच्च दिनेदिने।।
जपेद्दशसहस्त्रं तु शतमष्टोत्तरं तु वा।
कृष्णाष्टमीं समारभ्य यावत्कृष्ण चतुर्दशी।।
मासान्तसमये प्राप्ते वैरिवंश क्षयोभवेत्।
कारस्करं तु भल्लातैस्तैलेनाष्ट शतं हुनेत्।।
मासान्ते शत्रवस्तस्य पलायन्ते न संशयः।
समोदमादौ पयसामष्टोत्तरशतं हुनेत्।।

दिनत्रयं महेशानि सर्व रोगैः प्रमुच्यते।
बिभीतक तयोप्यष्ट–प्रादेशं परिमाणकम्।।
यन्नाम्ना धारयेद्वेदं शतमष्टोत्तरं जपेत्।
मासान्ते मृत्युमाप्नोति यदि त्राता विधिः स्वयम्।।
अपामार्गस्य समिधौ पायसं सघृतं हुनेत्।
रात्रौ यन्नाशमासास्ते नश्यन्तीह पदातिनः।।
यन्त्रस्तुहि समिद्भिर्यों याम्यास्यः सर्षपैस्तिलैः।
महानिशार्द्धे साहस्त्रं जुहुयाद्दिवसेन हि।।
पञ्चाहे नामी प्रणश्यन्ति सगोत्रा शत्रवो भृशम्।
शालुवं पक्षिराजानं पूजयेत्साधकोत्तमः।।
साष्टविंशति संख्याकान् ब्राह्मणान् भोजयेत सुधी।
शुक्ल प्रतिपदारभ्य पूर्णिमान्तं च नित्यशः।।
यो जपेदष्ट साहस्त्रं मुच्यते सर्व पातकैः।
शरभं शालुवं ध्यात्वा एतां विधिवदाचरेत्।।
पुत्तलीं च विधायाथ कुलाल कर मृण्मयीम्।
वायुं सम्यग्विधानेन कृत्वास्थाप्यस माहितः।।
स्नुहि क्षीरे तु संक्षिप्य मृष्टस्तदयुतं जपेत्।
उन्मत्तमूले निखनेदपस्मारी भवेत्तदा।।
शालुवं शिव रूपं च ध्यात्वा सम्यक्समाहितः।
निम्ब चूर्णेन कृत्वा तु पुत्तलीं च यथाविधिम्।।
पुत्तल्यां वायुमारोग्य स्पृष्ट्वा तामयुतं जपेत्।
श्मशाने निखनेद्देवि पुत्तलीं शत्रु चालयेत्।।

उन्मत्त मूले पुत्तल्यां वामारोप्यस्तु साधकः।
स्पृष्ट्वातीवायुतं मन्त्री ध्यात्वा शत्रून्वितन्वतः।।
निक्षिपेच्छत्रु देशे तु शत्रूणां चालनं भवेत्।
शन्यर्काङ्गारवारे तु जपेदयुत संख्यया।।
त्रिदिनान्ते रिपुन्वध्वा चालयेदाशु साधकः।
दूर्वांकुरैर्घृतासिक्तैः गोमये च विशेषतः।।
तिलाँ लाजा सर्षपाश्च मिश्रीकृत्य हुनेत्तदा।
त्रिदिनान्ते शत्रु संघाः पलायन्ते न संशयः।
पिष्टेन पुंत्तली कृत्वा मूलेनैव तु पूजयेत्।।
मांसयुक्तं तु नैवेद्यं ताम्बूलन्तु निवेदयेत्।
लाक्षारसेन संलिप्य विम्बस्य च शिरोगले।।
साध्य नाम च संयुक्तां लिखित्वा पञ्च पुत्तलीम्।
सदा पचेत् ततो वह्नौ समिद्भिः पिचुमन्दकैः।।
गणिकायाङ्गणे होमं कृत्वा चैव विधानतः।
जपादयुतमात्रेण पलायन्ते न संशयः।।
अर्क मूलं समादाय पुत्तलीं च यथाविधिम्।
तस्य प्राणस्य पवनं विदधीत यथोदितम्।।
तस्याश्च हृदिदेशे तु माया बीजं समालिखेत्।
तस्या शिरसिमालिख्य वह्नि बीजं सविन्दुकम्।।
पादयोश्च तथालिख्य पृथ्वी बीजं सभैरवम्।
उभयोस्कन्धयोश्चैव वाग्बीजं चैव वाग्भवम्।।
भार्गवं वदने पृष्ठे श्री बीजं भुवनेश्वरीम्।

पूजां च विधिवत्कृत्वा नैवेद्यं च निवेदयेत्।।
निखनेदर्क मूले च पलायन्ते च शत्रवः।
ततः शत्रुशरीरञ्च स्फोटयेत् पक्षि शालुवः।।
सप्ताहाच्च यम स्थाने नीयन्ते सर्व शत्रवः।
केवलं जपमात्रेण क्षीयन्ते शत्रवः स्वयम्।।
चतुरंगुली विस्तारं दशांगुली समायुतम्।
श्मशान मृत्तिकायां तु पुत्तलीं कारयेद्बुधः।।
श्मशानाग्नि समादाय उन्मत्त रस संयुतम्।
पुत्तल्युपरि खेंकारः पार्श्वे चिन्तामणीं लिखेत्।।
मस्तके काम राजं च हंस बीजं तु मूर्धनि।
स्नुहिक्षीराभिषेकं च विदधीतप्राणपूर्वकम्।।
स्नुहि वृक्षस्याधो भागे खनेत् प्रादेश मातृकम्।
शुक्लप्रतिपदारभ्य अष्टम्यन्तं जपेत्सुधीः।।
पराजिताः पलायन्ते शत्रवो नात्र संशयः।
शालुवं पक्षिराजानं शरभं शिव रूपिणम्।।
यो द्विजः सततं ध्यायेत् पलायन्ते च शत्रवः।
खादरीं पुत्तलीं कृत्वा पवनञ्च यथा विधिम्।।
तांस्पृष्ट्वा चायुतं मन्त्रं मुच्यते राज्य तस्करैः।
पुत्तली खादिरे मूले निक्षिपेत्तस्य शत्रवः।।
पुत्र मित्र कलत्रादीन् त्यक्त्वा देशान्तरं व्रजेत्।
राजवृक्षस्य पुतल्यां भू बीजं स्मर वह्निना।।
वाग्भवं वायु बीजं च श्री बीजं भुवनेश्वरी।

प्रादक्षिण्येन वेष्टव्यं पुत्तल्योपरि लेखितः।।
मूलेन राजवृक्षस्य समिद्धोमो विधीयते।
अष्टोत्तर सहस्त्रं च शतमष्टोत्तरं च वै।।
हुनेच्च विधिवन्मन्त्रं चतुःकण्ठं विधानतः।
त्रिदिनान्ते च विद्वेषः शत्रूणां च परस्परम्।।
रिपवः संक्षयं यान्ति पलायन्ते न संशयः।
इत्याकाश भैरव तन्त्रे अरिखण्डे।।
शरभ प्रयोग विधिर्नाम चतुश्चत्वारिंशत्पटलः।

**श्री देव्युवाच-**

देव देव महादेव गिरीश जगतां पते।
त्राहि मां दयया नाथ सच्चिदानन्द शाश्वतम्।।१।।
मन्त्राणामपि यत्सारं सर्व लोकैक साक्षिणम्।
रक्षणं सर्वजन्तूनां ब्रूहि एतद् विभोमनुम्।।२।।

**श्री शिवोवाच-**

रहस्य श्रृणुदेवेशि सर्व रक्षाकरं परम्।
यस्य स्मरण मात्रेण वैरिणां कुलनाशनम्।।३।।
भोग मोक्षप्रदं दिव्यं भुक्ति मुक्ति फलप्रदम्।
राज चौरादि मृत्यूनां नाशनं जय वर्द्धनम्।।४।।
ज्वर रोगघ्नमापद्यं मनुँ वक्ष्यामि तत्वतः।
शरभेश्वर मन्त्रस्य ऋषिः कालाग्नि रुद्रकः।।५।।
छन्दं स्तुति भवो देवो, भगवान् शरभेश्वरः।
खंकारं बीजमित्युक्तं स्वाहा शक्तिरतः परम्।।६।।

स्वेच्छा प्रयोग सिद्ध्यर्थ विनियोगः तथाम्बिके।
त्रिद्वि द्वादश नवकं सप्तकं तु नवक्रमात्।।७।।
मन्त्राक्षरैः करन्यासं मातृका सहितं मनुम्।
केशादिकं न्यसेन्मन्त्री करवक्त्र षडङ्गकम्।।८।।
वियन्निभ महोक्षः कृत्तिवासो वसानः
द्रुहिण सुर मुनीन्द्रैः स्तूयमानं गिरीशम्।
स्फटिक मणि जपा स्त्रक्, पुस्तकं यत्कराब्जे,
शरभमहमुपास्ये शालुवेशं खगेशम्।।६।।
तारं प्रथममुच्चार्य खे खां खं तदनन्तरम्।
प्राणग्रहासि द्वितयं हुं फट् च तदनन्तरम्।।१०।।
स्वाहेति पदमुच्चार्य शत्रुसंहरणाय च।
शरभ शालुवायेति पक्षिराजाय इत्यपि।।११।।
हुं फट् स्वाहेति मन्त्रोऽयं द्वि चत्वारिंशदक्षरः।
जपेद् वर्ण सहस्त्राणि संख्यानि च महेश्वर।।१२।।
दशांशं तर्पणं होमं शतांशं द्विजभोजनम्।
सहस्रांशमथो देवि क्रमादेवं समाचरेत्।।१३।।
होम द्रव्यान्यहं वक्ष्ये अधुना श्रृणु पार्वति।
स्वगृहे दक्षिणे भागे कल्पिते गृह कुण्डले।।१४।।
स्वगृह्योक्त विधानेन त्याज्यभागं तदाचरेत्।
तत्र दूर्वाग्र लुञ्चाञ्च तिललाजांश्च पायसम्।।१५।।
अपूपञ्च यवं चाज्यं क्रमात् सौम्यैः समाचरेत्।
अपामार्ग च वर्हिं च खादिरं च कटुत्रयम्।।१६।।

सैन्धवं सार्षपं चाज्यं क्रमात्कार्यं सुरेश्वरि।
होमेन विधिना देवि क्रूरसौम्यक्रियादिषु।।१७।।
हुतं जपं क्रियेद्भक्त्या अवश्यं क्रियतां न चेत्।
विपरीतं भवेत् तस्मादुदासीनं न कारयेत्।।१८।।
स्वयं शिवमयं ध्यात्वा पावकं शरभेश्वरम्।
होमान्ते तु जपेन्मन्त्री त्रिवारं शरभाष्टकम्।।१६।।
तेनाष्टकेन मन्त्रेण भगवान् वरदो भवेत्।
त्रिकोणं विलिखेत्पूर्वं तद्वाह्ये च दलद्वयम्।।२०।।
द्वादशारं च तद्वाह्ये तद्वाह्ये च नखाश्रयम्।
सप्तत्रिंश्च चतुः पञ्च भूपुरञ्चक्रमाल्लिखेत्।।२१।।
पावकादापृथिव्यन्तं लिखेन्मन्त्रां यथाक्रमम्।
तद्वहिः कोण षट्के तु प्रागारभ्य मनुं लिखेत्।।२२।।
फट् फट् जहि तया छिन्धि भिन्दि रुन्धि लिखेत्क्रमात्।
अकाादि क्षकारान्तं वेष्टयेत् विन्दु संयुतम्।।२३।।
महायन्त्रमिदं पुण्यं सप्तावरणकं परम्।
सर्व रोग प्रशमनं सर्वशत्रुजयं शुभम्।।२४।।
सर्व भूतवशीकारं सर्वपाप विमोचनम्।
नाना ज्वरं तु यन्त्रं च नाना क्षुद्र निवारणम्।।२५।।
य इमं धारयेद्भक्त्या नासाध्य तस्य विद्यते।
अनेनैव तु मन्त्रेण साक्षाच्छिव समोभवेत्।।२६।।
षट् सप्त कोष्ठेषु विलिख्य शारभमेकाग्रशुलं च
तथाहि साध्यम्।

वाह्ये तु मायावृत तारवेष्टितं जयाकरं जपतामाशुचक्रम।।२७।।

१ दूर्वा २ गुडूची ३ चञ्चु ४ तिल ५ लाजा ६ दुग्ध ७ अपूप ८ यव ९ घृत सौम्य क्रमः।

१ अपामार्ग २ खदिर ३ कटिम ४ सैन्धव ५ सर्षप ६ आज्य ७ क्रूरक्रमः अस्य श्री शरभेश्वर मन्त्रस्य कालाग्नि रुद्र ऋषिः अति जगती छन्दः श्री शरभेश्वरो देवता खं बीजं स्वाहा शक्ति, फट् कीलकं चतुर्विध पुरुषार्थ सिद्ध्यर्थे जपे विनियोगः। ॐ खें खां खं फट् हृदयाय नमः प्राणग्रहासि प्राणग्रहासि हुं फट् शिरसे स्वाहा सर्व शत्रु संहरणाय शिखायै वषट् शरभ शालुवाय पक्षिराजाय कवचाय हुं।

हुं फट् स्वाहा अस्त्राय फट्।

**अथ ध्यानम्-**

चन्द्रार्कौ वह्निदृष्टिः– कुलिशवरनखश्चञ्चलोत्युग्रजिह्वः।
काली दुर्गा च पक्षौ, हृदय जठरग्नो भैरवो वाडवाग्निः।
ऊरूस्थौ व्याधि मृत्यु शरभ वरखगश्चण्ड वातातिवेगः।
संहर्ता सर्व शत्रून् सजयति शरभः शाल्वः पक्षिराजः।।१।।
मृगस्त्वर्द्ध शरीरेण पक्षाभ्यां चञ्चुनाद्विजः।
अधो वक्त्रश्चतुष्पाद ऊर्ध्व वक्त्रश्चतुर्भुजः।।२।।
कालान्त दहनोपम्यो नील जीमूत निस्वनः।
अरिस्तद्दर्शनादेव विनष्ट बल विक्रमः।।३।।

**इति ध्यात्वा-**

सटाछटोग्ररूपाय पक्ष विक्षिप्त भूभृते।
अष्टापादाय रुद्राय नमः शरभ मूर्तये।।४।।
इति नमस्कृत्य जपेत्।

मन्त्रस्तु शिखा कवच मन्त्रयोवर्मास्त्रेपहाय हृदय षडङ्गेषु द्विचत्वारिंशदक्षरः समुच्चये। अथ गन्धयुक्ते प्रशस्ते भस्मनि त्रिकोणाष्ट दल द्वादशदल षोडशदल भूपुर द्वन्द्वात्मकं अरत्निमात्रं चक्रमुद्धृत्य मन्त्रेण देवमावाह्य पूजयित्वा त्रिकोणे चन्द्र सूर्य महा वह्नि त्रिकोणान्तश्चतुर्दिक्षु भैरव वाडवाग्नि दुर्गा काली अष्टदले लोकपालान् त्रिकोण पार्श्वयोः व्याधि मृत्यु, द्वादश दले—मदनां रक्त चामुण्डां मोहिनीं द्राविणीं शब्दाकर्षणिकां वाणीं रमां मायां पुलिन्दनीं शास्तारं क्षोभिणीं ज्येष्ठामिति षोडशदले ब्रह्माणं परां विष्णूं मायां बराहं पृथ्वीं विधिं शिवं, दलयोरश्विनौ वीरभद्रं भारतीं शिवं शङ्करं रुद्रं कालरुद्रं चेति अकराद्यैकैक स्वर पूर्वाः षोडश स्वर देवताः सम्पूज्य प्रथम भूपुरे दिक्षु गणेश यम स्कन्द भैरवान्, वायव्यादि विदिक्षु त्वरिता वीरभद्र वडवानल भैरव महामायां पूजयेत्। वाह्यपुरे अष्टदिक्षु ब्राह्म्यादिमातृः सम्पूज्य परितो वृत्त क्रमेण ब्रह्माणं जाह्नवीं, गणेशं भैरवं, भद्रकालीं कालीं जात—वेदसं, धर्मं, नन्दीश्वरं, परमात्मानं, पृथिवीं चण्डशुक्रं, विष्णुं, बलभद्रं धनदं पराशक्तिं दुर्गां धर्म

निर्विकल्पमग्निं भैरवं वर्णद्वयेश्विनौ भार्गवमीश्वरं वायुँ कृशानुं वरुणं शुक्रं शंकरम् द्वादशादित्यान् भारतं, सदाशिवं पृथिवीं, नृसिंहं, इत्याकाशभैरवोक्तान् ककाद्यर्ण देवतास्तद्वर्णाः सम्पूज्य पुनर्मध्ये देवं सम्पूज्य, जप्त्वा स्तुत्वा ह्युवास्य शिवोऽहमित भावयेत्। एवं यः सततंकुर्यात् स्वयमेव शिवो भवेत्। तद्भस्मागमनं श्रुत्वा कम्पन्ते विग्रहा ग्रहाः। किं पुनर्दर्शनादस्य भूतप्रेतादि राक्षसाः। ॐ नमः पक्षिराजाय निशित कुलिश नखवराय अनेक कोटि ब्रह्माण्ड कपाल मालालंकृताय सकल कुल महानाग भूषणाय सर्वभूत निवारणाय नृसिंह गर्व निर्वापकरणाय सकल रिपूणामटवी मोहनाय ह्योनिजाय शरभ शालुवाय ह्रां ह्रीं ह्रूं प्रवेशय प्रवेशय आवेशय आवेशय भाषय भाषय मोहय मोहय ह्रां स्तम्भय २ कम्पय २ घातय २ बन्धय २ भूत ग्रहंबन्धय २ रोग ग्रहं बन्धय २ बालग्रहं बन्धय २ यक्षग्रहं बन्धय २ सूतिका ग्रहं बन्धय २ चातुर्थि ग्रहं बन्धय २ भीम ग्रहं बन्धय २ अपस्मार ग्रहं बन्धय २ पिशाच ग्रहं बन्धय २ आवेश ग्रहं बन्धय २ अनावेश ग्रहं बन्धय २ काम होम त्रोटय २ प्रैं त्रैं ह्रैं मारय २ मुञ्च २ हूं फट् इत्याकाश भैरव कल्पोक्त पूजा क्रमः।

श्री पार्वत्युवाच

देव देव महेशान सर्वात्मन् जगद्गुरो।
रहस्यं शालुवेशस्य कवचाख्यं वद प्रभो।।१।।
स ऋषि छन्दसः ध्यायेत् देवता कीलकं त्वनु।
विनियोगो नियोतॄणां सर्वदं सिद्धदं मतम्।।२।।
श्रोतुमिच्छामि तत्वतः कोऽन्यो वक्तु क्षमस्त्विह।
शालुवेशः पक्षिराजो हृदि ध्येयः प्रसाधकैः।।३।।

**शिव उवाच।**

वक्ष्यामि श्रृणु देवेशि सर्व रक्षणमद्भुतम्।
शारभं कवच नाम चतुर्वर्ग फलप्रदम्।।४।।
शरभ शाल्वराजाख्य कवचस्य सदा शिवः।
ऋषिः छन्दोऽस्य जगती प्रोच्यते शरभेश्वरः।।५।।
देवता प्रणवो बीजं प्रकृतिः शक्तिरुच्यते।
कीलकं पक्षिराजेति सर्व रक्षा करो विभुः।।६।।
परप्रयोग शान्त्यर्थं सर्व शत्रु निवर्तये।
चतुर्वर्गार्थ सिध्यर्थे विनियोगः प्रकीर्तितः।।७।।
ऋषिं शिरसे विन्यस्य मुखे छन्दः सुरेश्वरि।
देवतां हृये न्यस्य बीजं गुह्ये न्यसेत्सुधी।।८।।
विनस्य पदयोः शक्तिं कीलकं नाभिमण्डले।
आपाद मस्तकं देवि विनियोगस्य भावना।।६।।
खां खीत्यादिभिः षड्भिः कराङ्गन्यासमाचरेत्।
देवतां हृदये ध्यात्वा पूजयित्वा समाहितः।।१०।।

स्पर्श वीक्षण संश्लिष्टं प्रतिस्थानं शनैर्जपेत्।
ध्यानमस्य प्रवक्ष्यामि समाहितमनाः शृणु।।११।।
अस्य श्री शरभ शाल्व राजाख्य कवचस्य सदा शिव ऋषिः जगती छन्दः श्री शरभेश्वरोदेवता ॐ बीजं ह्रीं शक्तिः पक्षिराजः कीलकमु पर प्रयोग शान्त्यर्थ सर्व शत्रु निवृत्तये चतुर्वर्गगार्थ सिद्धयर्थे जपे विनियोगः। शिरसि सदाशिवाय ऋषये नमः। मुखे जगत्यै छन्दसे नमः। हृदि श्री शरभेश्वराय देवतायै नमः गुह्ये ॐ बीजाय नमः पादयोः। ह्रीं शक्तये न्मः नाभौ पक्षि राजाय कीलकाय नमः। आपाद तल मस्तकं विनियोगस्य भावना। खां अंगुष्ठाभां नमः खीं तर्जनीभ्यां स्वाहा। खूं मध्यामाभ्यां वषट्। खैं अनामिकाभ्यां हुं। खौं कनिष्टकाभ्यां वौषट्। खः करतलकर पृष्ठाभ्यां फट्। खां हृदयाय नमः। खीं शिरसे स्वाहा। खूं शिखायै वषट्। खैं कवचाय हुं। खौं नेत्रात्रयाय वौषट्। खः अस्त्राय फ्ट्। अथ ध्यानम्–रत्नाभं सुप्रसन्नं त्रिनयनममृतोन्मत्त भाभिरामम्। कारुण्याम्बोधिमीशं वरदमभयदं चन्द्र रेखावतंशं। शंखाध्माता खिलाशा प्रतिहत विधिना भाममानात्म भासम्। सर्वेशं शालुवेशं प्रणत भय हर पक्षिराजं नमामि।।१।। इति ध्यात्वा लं पृथिव्यात्मकं गन्धं समर्पयामि। हं आकाशात्मकं पुष्पं समर्पयामि। यं

वाय्वात्मकं धूपं स०। रं वह्न्यात्मकं दीपं स०। वं अमृतात्मकं नैवेद्यं कल्पयामि। एवं मनसा सम्पूज्य यथा शक्ति मूलमन्त्रजपं कृत्वा कवचं पठेत्। अथ स्पर्श वीक्षण संश्लिष्ट प्रयोगः। ॐ ऐं ह्रीं श्रीं नमो भगवते श्री शिवाय मम पुरतः ज्वल२ प्रज्वल२ असाध्यं साधय२ रक्ष२ सर्वभूतेभ्यो हुं फट् स्वाहा श्री शिवः पुरतः पातु।।१।। ॐ ऐं ह्रीं श्रीं नमो भगवते मायाधीशाय मम पृष्ठतः ज्वल२ प्रज्वल२ असाध्यं साधय२ रक्ष२ सर्व भूतेभ्यो हुं फट् स्वाहा। मायाधीशः पृष्ठतः पातु।।२।। ॐ ऐं ह्रीं श्रीं नमो भगवते पिनाकिने मम दक्षिणे पार्श्वे ज्वल२ प्रज्वल२ असाध्यं साधय रक्ष२ सर्वभूतेभ्यो हुं फट् स्वाहा। पिनाकी दक्षिणे पार्श्वे पातु।।३।। ॐ ऐं ह्रीं श्रीं नमो भगवते महेश्वराय मम वामपार्श्वे ज्वल२ प्रज्वल२ असाध्यं साधयं२ रक्ष२ सर्व भूतेभ्यो हुं फट् स्वाहा वाम पार्श्वे महेश्वरः पातु।।४।। ॐ ऐ ह्रीं श्रीं नमो भगवते शम्भवे मम शिखाग्रे ज्वल२ प्रज्वल२ असाध्य साधय२ रक्ष२ सर्वभूतेभ्यो हुं फट् स्वाहा शिखाग्रे पातु मे शम्भुः।।५।। ॐ ऐं ह्रीं श्रीं नमो भगवते शंकराय मम निटले ज्वल ज्वल प्रज्वल२ असाध्यं२ रक्ष रक्ष सर्व भूतेभ्यो हुं फट् स्वाहा निटलं पातु शङ्करः।।६।। ॐ ऐ ह्रीं श्रीं नमो भगवते ईश्वराय मम वदने ज्वल२

प्रज्वल$_{३}$ असाध्यं साधय$_{२}$ रक्ष$_{२}$ सर्व भूतेभ्यो हुं फट् स्वाहा ईश्वरो वदनं पातु।।७।। ॐ ऐ ह्रीं श्रीं नमो$_{२}$ भगवते पुरान्तकाय मम भ्रुवोर्मध्ये ज्वल$_{२}$ प्रज्वल$_{३}$ असाध्यं साधय$_{२}$ रक्ष$_{२}$ सर्वभूतेभ्यो हुं फट् स्वाहा भ्रुवोर्मध्ये पुरान्तकः पातु।।६।। ॐ ऐ ह्रीं श्रीं नमो भगवते स्थाणवे मम भ्रुवोर्ज्वल$_{२}$ प्रज्वल$_{५}$ असाध्यं साधय$_{२}$ रक्ष$_{२}$ सर्वभूतेभ्यो हूं फट् स्वाहा भ्रुवौ पातु मम स्थाणुः।।६।। ॐ ऐ ह्रीं श्रीं नमो भगवते कपर्दिने मम लोचनयोर्ज्वल२ प्रज्वल$_{२}$ असाध्यं साधय$_{२}$ रक्ष$_{२}$ सर्व भूतेभ्यो हुं फट् स्वाहा कपर्दी पातु लोचने।।१०।। ॐ ऐ ह्रीं श्रीं नमो भगवते शर्वाय मम श्रोत्रयोर्ज्वल ज्वल प्रज्वल२ असाध्यं साधय२ रक्ष२ सर्व भूतेभ्यो हुं फट् स्वाहा शर्वो मे श्रोत्रयोः पातु।।११।। ॐ ऐ ह्रीं श्रीं नमो भगवते वागीशाय मम लम्बिकायां ज्वल$_{२}$ प्रज्वल$_{२}$ असाध्यं साधय$_{२}$ रक्ष$_{२}$ सर्व भूतेभ्यो हुं फट् स्वाहा वागीशः पातु लम्बिकाम्।।१२।। ॐ ऐ ह्रीं श्रीं नमो भगवते वृषारुढाय मम नासायां ज्वल$_{२}$ प्रज्वल$_{२}$ असाध्यं साधय$_{२}$ रक्ष$_{२}$ सर्वभूतेभ्यो हुं फट् स्वाहा नासायां मे बृषारुढ़ः।।१३।। ॐ ऐ ह्रीं श्रीं नमो भगवते बृषभध्वजाय मम नासाग्रे ज्वल$_{२}$ प्रज्वल$_{२}$ असाध्यं साधय$_{२}$ रक्ष सर्वभूतेभ्यो हुं फट् स्वाहा नासाग्रं बृषभध्वजः।।१४।। ॐ ऐ ह्रीं श्रीं नमो भगवते स्मरारये

मम ताल्वो ज्वल२ प्रज्वल२ असाध्यं साधय२ रक्ष२ सर्व भूतेभ्यो हुं फट् स्वाहा स्मरारिः पातु मे ताल्वोः।।१५।। ॐ ऐं ह्रीं श्रीं नमो भगवते भक्तवत्सलाय मम ओष्ठयोः ज्वल२ प्रज्वल२ असाध्यं साधय२ रक्ष२ सर्वभूतेभ्यो हुं फट् स्वाहा ओष्ठयोः भक्त वत्सलः।।१६।। ॐ ऐ ह्रीं श्रीं नमो भगवते मृत्युञ्जयाय मम दन्तेषु ज्वल२ प्रज्वल२ असाध्यं साधय२ रक्ष२ सर्वभूतेभ्यो हुं फट् स्वाहा पातु मृत्युञ्जयो दन्तान्।।१७।। ॐ ऐ ह्रीं श्रीं नमो भगवते भूतराजाय मम चिबुके ज्वल२ प्रज्वल२ असाध्यं साधय२ रक्ष२ सर्व भूतेभ्यो हुं फट् स्वाहा चिबुकं पातु भूतराट्।।१८।। ॐ ऐ ह्रीं श्रीं नमो भगवते परमेशाय मम कपोलयोः०

परमेशः कपोलो मे।।१९।।

ॐ ऐ ह्रीं श्रीं नमो भगवते कपालभृते कपाल मम त्रके० त्रिकं पातु कपालभृत्।।२०।।

ॐ ऐ ह्रीं श्रीं नमो भगवते

ॐ ऐ ह्रीं श्रीं नमो भगवते पशुपतये मम कण्ठे० कण्ठं पशुपतिः पातुः।।२१।।

ॐ ऐ ह्रीं श्रीं नमो भगवते शूलिने मम हनौ० शूलीं पातु हनुं मम

।।२२।।

ॐ ऐ ह्रीं श्रीं नमो भगवते हराय मम स्कन्ध युग्मे० स्कन्ध युग्मे हरः पातु ।।२३।।

ॐ ऐं ह्रीं श्रीं नमो भगवते धूर्जटये मम भुजयोः० धूर्जटिः पातु मम भुजौ।।२४।।

ॐ ऐ ह्रीं श्रीं नमो भगवते महादेवाय मम भुजमूले० भुजमूले महादेव।।२५।।

ॐ ऐ ह्रीं श्रीं नमो भगवते ईशानाय प्रकूर्परयोः० ईशानो मे प्रकूर्परौ।।२६।।

ॐ ऐ ह्रीं श्रीं नमो भगवते जगन्नाथाय मम सन्ध्योः० मम सन्धी जगन्नाथः।।२७।।

ॐ ऐं ह्रीं श्रीं नमो भगवते चन्द्रशेखराय मम प्रकोष्ठे० प्रकोष्ठ चन्द्रशेखरः।।२८।।

ॐ ऐ ह्रीं श्रीं नमो भगवते त्रिनेत्राय मम मणि बन्धे० मणिबन्धे त्रिनेत्रो मे।।२९।।

ॐ ऐं ह्रीं श्रीं नमो भगवते भीमाय मम कर स्थले० भीमः पातु कर स्थले।।३०।।

ॐ ऐ ह्रीं श्रीं नमो भगवते मृडाय मम पृष्ठे० मृडः पातु मम पृष्ठ।।३१।।

ॐ ऐं ह्रीं श्रीं नमो भगवते रुद्राय ममाङ्गुष्ठ द्वये० रुद्रोऽङ्गुष्ठ द्वयं मम।।३२।।

ॐ ऐं ह्रीं श्रीं नमो भगवते उमा सहायाय मम तर्जन्योः उमा सहायस्तर्जन्यौ।।३३।।

ॐ ऐं ह्रीं श्रीं नमो भगवते भर्गाय मम मध्यमयोः भर्गो मे पातु मध्यमे।।३४।।

ॐ ऐ ह्रीं श्रीं नमो भगवते करालास्याय मम अनामिकयोः० अनामिके करालास्यः ।।३५।।

ॐ ऐ ह्रीं श्रीं नमो भगवते कालकण्ठाय मम कनिष्ठयोः० कालकण्ठः कनिष्ठके ।।३६।।

ॐ ऐ ह्रीं श्रीं नमो भगवते गंगाधराय ममांगुली पर्वसु०गंगाधरोऽममांगुली पर्वणि।।३७।।

ॐ ऐ ह्रीं श्रीं नमो भगवते अप्रमेयाय मम नखेषु० अप्रमेयो नखानि मे।।३८।।

ॐ ऐ ह्रीं श्रीं नमो भगवते तत्पुरुषाय मम वक्षसि० वक्षः तत्पुरुषः पातु।।३९।।

ॐ ऐ ह्रीं श्रीं नमो भगवते दक्षाध्वरान्तकाय मम कक्षयोः कक्षौ दक्षाध्वरान्तकः।।४०।।

ॐ ऐ ह्रीं श्रीं नमो भगवते अघोराय मम हृदये० अघोरो हृदयं पातु।।४१।।

ॐ ऐ ह्रीं श्रीं नमो भगवते वामदेवाय मम स्तनद्वये० वामदेवः स्तनद्वये।।४२।।

ॐ ऐ ह्रीं श्रीं नमो भगवते भाल दृशे मम जठरे० भाल दृक् जठरं पातु।।४३।।

ॐ ऐ ह्रीं श्रीं नमो भगवते नारायणाव्ययाय मम नाभौ० नाभिं नाराणोऽव्यय०।।४४।।

ॐ ऐ ह्रीं श्रीं नमो भगवते प्रजाकराय मम कुक्षौ० कुक्षिंप्रजाकरः पातु।।४५।।

ॐ ऐं ह्रीं श्रीं नमो भगवते महाबलाय मम कुक्षि पार्श्वयोः० कुक्षिपार्श्वे महाबलः ।।४६।।

ॐ ऐं ह्रीं श्रीं नमो भगवते सद्यो जाताय मम कटौ० सद्यो जातः कटिं पातु ।।४७।।

ॐ ऐं ह्रीं श्रीं नमो भगवते भैरवाय मम पृष्ठ भागे० पृष्ठ भागं तु भैरवः ।।४८।।

ॐ ऐं ह्रीं श्रीं नमो भगवते मोहनाय मम जघने० मोहनो जघने पातु ।।४६।।

ॐ ऐं ह्रीं श्रीं नमो भगवते जितेन्द्रियाय मम गुदे० मम जितेन्द्रियः ।।५०।।

ॐ ऐं ह्रीं श्रीं नमो भगवते ऊर्ध्व रेतसे मम लिङ्ग देशे ।।५१।।

ॐ ऐं ह्रीं श्रीं नमो भगवते बृषभध्वजाय० मम बृषणं बृषभध्वजः ।।५२।।

ॐ ऐं ह्रीं श्रीं नमो भगवते भवाय ममोरुयुग्मे० ऊरुयुग्मं भवः पातु ।।५३।।

ॐ ऐं ह्रीं श्रीं नमो भगवते स्मरान्तकाय मम जानु युग्मे० जानु युग्मं स्मरान्तकः ।।५४।।

ॐ ऐं ह्रीं श्रीं नमो भगवते हुँकाराय मम जंघयोः० हुंकारः पातु मे जंघे ।।५५।।

ॐ ऐं ह्रीं श्रीं नमो भगवते फट्काराय मम गुल्फके० फट्कारो मम गुल्फके ।५६।।

ॐ ऐं ह्रीं श्रीं नमो भगवते वषट्काराय मम पाद पृष्ठे०

वषट्कारः पातु पृष्ठम्।।५७।।

ॐ ऐं ह्रीं श्रीं नमो भगवते वौषट्काराय मम अंघ्रिणोस्तले० वौषटकारोंऽघ्रिणोस्तले।।५८।।

ॐ ऐं ह्रीं श्रीं नमो भगवते स्वाहाकाराय मम अङ्गु लिपार्श्वे० स्वाहाकारोऽङ्गुली पार्श्वे।।५६।।

ॐ ऐं ह्रीं श्रीं नमो भगवते स्वधाकाराय मम अङ्गु लीषु० स्वधाकारोंगुली श्चमे।।६०।।

ॐ ऐं ह्रीं श्रीं नमो भगवते त्वरिताय मम सर्व सन्धिषु० सर्व सन्धीनिमेत्वरितः।।६१।।

ॐ ऐं ह्रीं श्रीं नमो भगवते नृसिंहजिते मम रोम कूपेषु० रोम कूपान्नृसिंहजित्।।६२।।

ॐ ऐं ह्रीं श्रीं नमो भगवते मनोवेगाय मम त्वचिं पातु मनोवेगः।।६३।।

ॐ ऐं ह्रीं श्रीं नमो भगवते कालजिते मम रुधिरे० रुधिरं पातु कालजित।।६४।।

ॐ० पुष्टिदाय मम मांसे० पुष्टिदः पातु मे मांसम्।।६५।।

ॐ०स्वस्तिदाय मम मेदसि० मेदो मे पातु स्वस्तिदः।।६६।।

ॐ० सर्वात्मने ममास्थिचये० सर्वात्मास्थिचयं पातु।।६७।।

ॐ० जगत्प्रभवे मम मज्जनि० मज्जानं मे जगत्प्रभुः।।६८।।

ॐ० वृद्धि कराय मम शुक्रे० शुक्रं वृद्धिकरः पातु।।६६।

ॐ०वाचामधीश्वराय मम बुद्धौ० बुद्धिं वाचामधीश्वरः।।७०।।

ॐ० शरभेश्वराय मम मूलाधारे–मूलाधारेम्बुजे०मूलाधाराम्बुजं

पातु भगवान् शरभेश्वरः।।७१।।
ॐ० अजाय मम स्वाधिष्ठाने० स्वाधिष्ठानमजः पातु।।७२।।
ॐ० हरिप्रियाय मम मणिपूरे० मणिपूरं हरिप्रियः।।७३।।
ॐ० शालुवेशाय मम अनाहते० अनाहतं शालुवेशः।।७४।।
ॐ० जीवनायकाय मम विशुद्धे० विशुद्धं जीवनायकः।।७५।।
ॐ० सर्वज्ञानप्रदाय देवाय सदाशिवाय मम ललाटे सर्वज्ञानप्रदोदेवो ललाटं मे सदाशिवः।।७६।।
ॐ० महादेवाय मम ब्रह्म रन्ध्रे०ब्रह्मरन्ध्रे महादेवः।।७७।।
ॐ० नमो० पक्षिराजाय ममाखिला कृतौ० पक्षिराजोऽखिला कृतिः।।७८।।
ॐ० सर्वलोक वशीकराय परवर्गजितेर्मायथि० पातू मां परवर्गजित।।७९।।

ॐ वज्रमुष्टि वराभीति हस्ताय कालाभ्र सन्निभाय विजया सहिताय ममऐन्द्र्यां ककुभि० वज्रमुष्टि वराभीति हस्तः कालाभ्र सन्निभः विजया सहितः पातु चैन्द्रीं ककुभमग्निजित्।।८०।।

ॐ शक्ति शूल कपालासि हस्ताय सौदामिनी प्रभाय जया युताय महाभीमाय मम वैश्वनर्या दिशि० शक्तिशूल कपालासि हस्तः सौदामिनी प्रभः, जयायुतो महाभीमः पातु वैश्वानरीं दिशम्।।८१।।

ॐ दण्डासि मुसल हल पाशाङ्कुश कराम्बुजाय यमान्तकाय अजिता युक्ताय मम दक्षिणस्यां दिशि०

दण्डासिमुसलहस्त पाशाङ्कुश कराम्बुजः
यमान्तिकोऽजितायुक्तो दक्षिणां पातु मे दिशम्।।८२।।

ॐ खड्ग खेटाग्नि परशु हस्ताय शत्रुविमर्दनाय अपराजिता युक्ताय मम नैर्ऋत्यां दिशि० खड्ग खेटाग्नि परशु हस्तः शत्रु विमर्दनः अपराजिता युक्तः सदाव्यान्नैर्ऋतीं दिशम्।।८३।।

ॐ पाशाङ्कुश धनुर्वाण पाणये घोरायुताय ग्रहाय हरिद्राभाय आत्मजिते मम वारुण्यां दिशि० पाशाङ्कुश धनुर्वाण पाणिर्घोरायुतो ग्रहः हरिद्राभोऽनिशं पायाद्वारुणीदिशमात्मजित्।।८४।।

ॐ ध्वजोग्र क्रकचोदार भुजाय दुर्गायुताय खगाय शिव चण्डवेगाय मम मारुत्यां दिशि० ध्वजोग्र क्रकचोदार भुजो दुर्गायुतो खगः चण्डवेगः शिवः पायात्सततं मारुतीं दिशम्।।८५।।

ॐ गदाक्ष स्त्रग्वराभीति कराम्भोजाय श्रिया युताय कनकाभाय महातेजसे मम कौबेर्यां दिशि पाशाङ्कुश धनुर्वाण गदाक्षस्त्रग्वराभीति कराम्भोजः श्रियायुतः कनकाभो महातेजाः पातु कौवेरिकीं दिशम्।।८६।।

ॐ त्रिशुलाहि कपालाग्निदोस्तलाय विद्यायुताय भस्मोद्धूलित सर्वाङ्गाय अपराजिताय मम ईशान्यां दिशिः० त्रिशूलाहि कपालाग्निदोस्तलः विद्ययायुतः, भस्मोद्धूत सर्वाङ्ग, शैवीं पात्वपराजितः।।८७।।

ॐ जपाक्षपुस्तकाम्भोज कमण्डलु लसत्कराय गिरा युक्ताय सर्वभूतहितेरताय मम ऊर्ध्वायां दिशि० जपाक्ष पुस्तकाम्भोज लसत्करः। ऊर्ध्वं पातु गिरा युक्तः सर्वभूत हिते रतः।।८८।।

ॐ शंखचक्रवराभीति हस्ताय पद्मयुताय अव्ययाय नीलाञ्जनसमाय निलाय मम पाताले० चक्रवराभीति हस्तः, हस्तपद्मयुतोऽव्यय नीलाञ्जन समोनीलः पातालं पात्वनारतम्।।८९।।

ॐ नरसिंह जिते शालुवाय मम अनुक्तासु विदिक्षु० अनुक्ता विदिशः पातु शालुवो नरसिंह जित्।।९०।।

ॐ शरभाय मम संग्रामे० शरभः पातु संग्रामे।।९१।।

ॐ वैरिकुलान्तकाय मम युद्धे० युद्धे वैरिकुलान्तकः ।।९२।।

ॐ सर्व सौभाग्यदाय मम जाग्रत् स्वप्न सुषुप्तिषु० सर्व सौभाग्यदः पातु जाग्रत् स्वप्न सुषुप्तिषु।।९३।।

ॐ सर्व सम्पत्प्रदाय मम धन धान्यादिके सर्व सम्पत्प्रदः पातु धनधान्यादिकं मम।।९४।।

ॐ सन्तानदाय मम सुतासु० सन्तानदः सुताः पातु ।।९५।।

ॐ आयुष्कराय मम पुत्रेषु० पुत्रानायुष्करोऽनिशम्।।९६।।

ॐ वृद्धिकराय मम बन्धुषु० बन्धून् वृद्धि करः पातु ।।९७।।

ॐ वशंकराय मम गृहे० गृहं मम वशंकरः।।९८।।
ॐ ग्रामेश्वराय मम ग्रामे०ग्रामेश्वरो पातु ग्रामम्।।९९।।
ॐ दिगम्बराय मम राज्ये०राज्यं पातु दिगम्बरः।।१००।।
ॐ शान्तिकराय मम राष्ट्रे० शान्तिकरः पातु।।१०१।।
ॐ धर्मशासनाय मम राज्ञि० राजानं धर्मशासनः।।१०२।।
ॐ दुःखहराय मम मार्गे०मार्ग दुःख हरः पातु।।१०३।।
ॐ भैरवाय मम धर्म कर्मसु०धर्मं कर्मणि भैरवः।।१०४।।
ॐ बटुकाय मम सर्वस्मिन् अवस्था त्रिंतयेषु० वटुकः पातु मे सर्वमवस्था त्रितयेषु च।।१०५।।
इति स्पर्श वीक्षण संश्लिष्ट सकामना प्रयोगः।।
इति दश वारं प्रजप्य ये ग्राम घातकाः इत्यादि पठेत् अन्ते मूलं जपेत्। स्पृशन् पश्यन् जपं कृत्वा, प्रतिस्थानं समाहितः। प्रार्थयेदखिलं स्वेष्टं हृदिस्थं शालुवेश्वरम्।।१०६।।

ये ग्राम घातका क्रूरा कपटा दौष्टका नराः
तस्करा शत्रवः क्रुद्धा वधा सक्ताः पलाशिनः।।१०७।।
लग्नाचरा विटा भ्रष्टाः दिवाचर निशाचराः
ते सर्वे पक्षिराजस्य पक्षवात पराहताः।।१०८।।
स्त्री बालसहिता क्षिप्रं पितृ मातृ कुलान्विता।
भग्न चित्तागत स्थाना यान्तु देशान्तरं स्वयम्।।१०९।।
ये दुष्ट ग्रहाः रक्षः पिशाचा देवयोनयः।
चतुः षष्ठि गणाः सप्त सप्तत्युन्मादका ग्रहाः।।११०।।
अष्टाशीति महाभूता सप्त कोटि महा ग्रहाः।

नवतिर्ज्वर भेदाश्च शत भेदाश्चकृत्तिका।।१११।।
पञ्चाशद् गण नाथाश्च नियुता कृत्तिभा ग्रहा।
प्रेतारुढास्त्रयस्त्रिंशद् पिण्डदान परायणा।।११२।।
अयुतं क्षुद्र भेदाश्च चत्वारिंशच्छिवाह्वया।
द्वात्रिंशदहिंवक्राश्च विंशं मार्जार वक्रकाः।।११३।।
चतुः षष्टचाखु रूपाश्च ये चान्ये क्षुद्रयोनयः।
ते सर्वे शालुवेशस्य शंख निःस्वन मोहिताः।।११४।।
विखिन्ना स्खलिताः स्वान्ताः प्राणायम परायणाः।
गच्छन्तु सप्रयोक्तारो देशान्तरमनिच्छया।।११५।।
ये चान्ये वनजा ग्राम्या शनुकोरग वृश्चिकाः।
आशीविषा शिवा ब्याला व्याघ्रा ऋक्षेभसूकराः।।११६।।
गृद्धाश्येना खगाः काका दंशकाः शशकाः मृगाः।
एते शरभ हस्ताग्र नरवक्षत विमोहिताः।।११७।।
सृवद् रक्त घटा सिक्ताः शिलातल विताडिता।
सम्भिन्न तनवः शीघ्रं नश्यन्त्यखिल दुश्चराः।।११८।।
न दशन्त्युरगाः क्वापि नाति वातोप वीजताम्।
न दहत्य सहो वहिरायान्त्यापो न चाधिकम्।।११९।।
न वर्षत्यति वृष्टिश्च न पतत्यशनिः क्वचित्।
ना क्रमत्यप मृत्युश्च नचोत्पाताः कथंचन।।१२०।।
न भ्रियन्त्वम्भसि जनाः न भवत्यशुभं क्वचित्।
न वदन्त्यशुभं वाक्यं जन्तवो मम देश के।।१२१।।
न स्याद्वैरं च जन्तूनां अन्योन्यं राजके मम।

भवन्तु सुखिनः सर्वे सर्वाः सन्तु पतिव्रताः।।१२२।।
सर्वाः सूयन्तु सत्पुत्रान् पुत्रींश्च शुभ लक्षणाः।
सर्वे सर्वाश्च नन्दन्तु सन्तु कल्याण कारकाः।।१२३।।
राजन्वती महीचास्तु राजा भवतु धार्मिकाः।
सुस्त्रवन्तु पयो गावः फलत्वोषधिकोऽधिकम्।।१२४।।
फलन्तु फलदा वृक्षाः सर्वं भवतुमेऽखिलम्।
ममास्तु तरसा नूनमात्मज्ञानमचञ्चलम्।।१२५।।
काम क्रोध महालोभ सम्मोह मद मत्सराः।
मा सन्तु क्वापि शरभेश भगवन्करुणानिधे।।१२६।।
गौरी वल्लभ कामारे कालकूट विषादन।
मामुद्धरापदाम्भोधेस्त्रिपुर ध्नान्धकान्तक।।१२७।।
शरभेश्वर विश्वेश पक्षिराज दया निधे।
देहि मे त्वचलां भक्तिं प्रणतोऽस्मि पुनः पुनः।।१२८।।
शालुवेश जगन्नाथ सर्व भूत हिते रत।
पाहि मां तरसा चौरात् दुष्टान्नाशय नाशय।।१२६।।
काल भैरव विश्वेश विश्व रक्षा परायण।
रक्षोमूषक चौरेभ्यो धान्यराशिमिसं प्रभो।।१३०।।
पक्षिराज महादेव प्रणतार्ति विनाशन।
तस्करेण हृतं वस्तु शीघ्र दापय दापय।।१३१।।
ये मर्म वादिनः क्षुद्राः क्षुद्रोपद्रव कारकाः
सर्वाचार परित्यक्ताः मानहीनाश्चरोधकाः।।१३२।।
ते सर्वे शालुवेशस्य मुसलायुध चूर्णिता।

नश्यन्तु निमिषार्द्धेन पावकावृत तूलवत्।।१३३।।
ये जनाद्रोहिणोऽल्पाशा त्वकालोचित भाषिणः
सत्कर्म विघ्न कर्तारः शान्ति भर्त्साः परायणाः।।१३४।।
ते शालुवेश हस्ताग्र खड्ग निर्भिन्न देहिनः।
पतन्तु भूतले याम्यां प्राणास्तेषां प्रयान्तुवै।।१३५।।
त्वदंघ्रि ध्यान निर्दग्ध पापकोशाय मन्त्रिणे।
मह्यं द्रुह्यन्ति ये तेषां विभवानि क्षयं त्वरम्।।१३६।।
सदाचार परंनित्यं साधकं मां विवेकिनम्।
येचाक्रामन्ति संग्रामे ते गच्छन्तु पराहताः।।१३७।।
त्वदीये नैव मार्गेण संचरन्तं जयातुरम्।
ये वदन्ति परीवादं भ्रान्ताः शीघ्रं भवन्तु ते।।१३८।।
त्वदागम परं धीरं ये मां तर्जयितुं बलात्।
मनसाप्यनु मन्यन्ते तस्यान्तं भवतु क्षणात्।।१३६।।
मनसा कर्मणा वाचा ये इच्छन्त्यति दुःसहम्।
ते मोह शोक रोगाब्धौ पतन्त्वाशु शिवाज्ञया।।१४०।।
मदीयानि पदार्थानि ग्रहीतुं योऽवलोकते।
तत्क्षणादेव नष्टाक्षो भवत्वेव शिवाज्ञया।।१४१।।
मदीयं द्रव्यमादाय ये गच्छन्तीह तस्कराः।
सिंहारि पाश सम्बद्धास्ते गच्छन्तु प्रदक्षिणम्।।१४२।।
सीमान्तगाश्च ये चौरा ग्रहीत द्रव्या संचयाः।
अवशावयवास्तेतु आगच्छन्तु शिवाज्ञया।।१४३।।
तस्करा निम्नगागीताः खात धान्य धनादिकाः।

पक्षिराजाङ्कुशाकृष्टाः समागच्छन्तु ते द्रुतम्।।१४४।।
समाहृताः पदार्थाः देशातीताश्च तस्कराः।
शरभेश हलाकृष्टास्ते आगच्छन्तु सानुगाः।।१४५।।
चौराः ग्रहीतुमुद्युत्काः समागच्छन्ति मद्गृहे।
ते शालुवेश पक्षोग्र वातैर्गच्छन्तु सत्वरम्।।१४६।।
शान्तं विवेकिनं भक्तं त्वदंघ्रिध्यान तत्परम्।
ब्रुवन्ति येऽसहं प्राणा स्तेषां यान्तु यमीपुरम।।१४७।।
षट् त्रिंशत् कोष्टके यन्त्रे रेखाशूलाग्रमध्यगे।
स्वेच्छा मन्त्रं लिखित्वा तु जपेदाराध्य साधकः।।१४८।।
उदङ्मुख सहस्त्रं तु स्वरक्षायै जपेन्निशि।
नष्टाहरणके पञ्च रात्रं पश्चिम दिङ्मुखः।।१४६।।
मारणे सप्तरात्रं तु दक्षिणाभिमुखो जपेत्।
रोगानिग्रहणं चाष्ट रात्रमाग्नेय दिङ्मुखः।।१५०।।
इतिगुह्यं महामन्त्रं परमं सर्वार्थ सिद्धिदम्।
शरभेश्वराख्य कवचं चतुर्वर्ग फल प्रदम्।।१५१।।
प्रत्यहं प्रति पक्षं प्रतिमासमथापिवा।
यो जपेत्प्रतिवर्षंवा वरेण्यं सशिवोभवेत्।।१५२।।
एवं च जपतः पुंसः पातकञ्चोपपातकम्।
सर्वं विलयमाप्नोति रविणातिमिरं यथा।।१५३।।
दशाब्दं यो जपेन्नित्यं प्रातरुत्थाय साधकः।
सर्वं सिद्धि समाश्रित्य देहान्ते स शिवोभवेत्।।१५४।।
त्रिकालं ध्यान पूर्वंतु जपेत् द्वादश वार्षिकम्।

कायनानेन वै देवि जीवन्मुक्तो भवेत्तुसः।।१५५।।
शतवारं जपेन्नित्यं मण्डलं यो वरानने।
सोऽणिमादि गुणान्प्राप्य विचरे त्स्वेच्छया सदा।।१५६।।
अतलादिधारण्यादि भुवनानि चतुर्दश।
विचरेत्कामवत्सर्वैः पूज्यमानो यथा सुखम्।।१५७।।
त्रिमासं यो जपेन्नित्यमष्टोत्तर सहस्त्रकम्।
सहसा शरभेशस्य स्वरुपं लभतेऽम्बिके।।१५८।।
षण्मास यो जपेन्नित्यं प्रयतः सुद्दढ़व्रतः।
मद्रूपधारकैर्मर्त्यैः सह सिद्धि प्रदायकः।।१५९।।
मम लोके च सम्पूज्यो विष्णुलोके तथैव च।
ब्रह्म लोके च रमते सर्वत्र न निवार्यते।।१६०।।
इन्द्राग्नि यम यक्षेश जलेश पवनैस्सदा।
सोमेशानन्त लक्ष्मीशैर्दिशां पालैश्च पूज्यते।।१६१।।
आदित्य सोम पृथ्वीज बुध श्रीगुरुभार्गवैः।
पूज्यते सग्रहैस्सर्वैसशनिराहुकेतुभिः।।१६२।।
क्रत्वंगिरः पुलस्त्यैश्च पुलहात्रि मरीचिभिः।
दश काश्यप भृग्वादि योगिभिश्च प्रपूज्यते।।१६३।।
भैरवै र्वसुभिर्रुद्रैरादित्यै गणपत्यकैः।
दिग्गजैश्च महानागैदिव्यास्त्रैर्दिव्यवाहनैः।।१६४।।
माहेश्वरैर्महा रत्नैः कामधेनु सुरद्रुमैः।
सरिद्भिस्सागरैः शैलैर्देवताभिस्तपोधनैः।।१६५।।
दानवैः राक्षसैः क्रूरैः सिद्धगन्धर्व किन्नरैः।

राक्षैर्विद्याधरैर्नागैरप्सरोभिश्चपूज्यते ।।१६६।।
अपस्मारग्रहैर्भीमैः हर्म्यस्थैर्ब्रह्मराक्षसैः।
वैतालैर्खेचरैर्मर्त्यैः कूष्माण्डैः राक्षस ग्रहैः।।१६७।।
ज्वालावक्रैस्तमोहारैः स्त्रीग्रहैः पाप संग्रहैः।
भूतप्रेत पिशाचाद्यैः ग्रहैः सर्वै संपूज्यते।।१६८।।
ब्राह्मणैः क्षत्रियैर्वैश्यैःशूद्रैरन्यैश्च जातिभिः।
पशुपक्षिमृगैर्व्यालैः पूज्यते सर्वजन्तुभिः।।१६६।।
किमन्य बहुनोक्तेन तव वक्ष्ये यथातथम्।
मया च विष्णुना चैव विश्वकर्ता च पाल्यते।।१७०।।
भवान्या चगिरा लक्ष्म्या ब्रह्माण्याद्यष्ट मातृभिः
गणेश्वरादि योगीन्द्रैः योगिनीभिः स पाल्यते।।१७१।।
य इदं पूजते भक्त्या नासाध्यं तस्य विद्यते।
कवचेन्द्रं महामन्त्रं जपेदस्याः अनुत्तमम्।।१७२।।
उच्चाटने मरुद्वक्त्रो विद्वेषो राक्षसाननः।
प्रागाननोऽभिबृद्धौ तु सर्वेष्वीशानजिङ्मुखः।।१७३।।
पठेत् स कवचं देविध्यान निष्ठं तु पूर्वकम्।
सर्व सिद्धिमवाप्नोति सहसा साधकोत्तमः।।१७४।।
देव देव महादेव शिव कारुण्यवारिधे।
पाहि मां प्रणतं स्वामिन् प्रसीद सततं मम।।१७५।।
यत्कृतं तन्नकृतयं, यदकृत्यं, तदकृत्यवदाचरितम्।
उभयोः प्रायश्चित्तं शिव तव नामाक्षर द्वयोच्चरितम्।।१७६।।